ततः सर्वैर्मत्स्यैरालोचितम् । "इह समये तावदुपकारक एवायमुपलक्ष्यते अस्माकम् । तदयमेव यथाकर्त्तव्यं पृच्छ्यताम् ।
तथा चोक्तम्, उपकर्त्त्राऽरिणा सन्धिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ १६ ॥

मत्स्या ऊचुः, "भो वक ! अस्माकं कुत्र रक्षणोपायः ?" वको ब्रूते, "अस्ति रक्षणहेतुर्जलाशयान्तरम् । तत्राहमेकैकशो युष्मान् नयामि ।" मत्स्यैरपि भयादुक्तमेवमस्तु । ततोऽसौ दुष्टवकस्तान् मत्स्यान् एकैकान् नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य वदति । "ते मया जलाशयान्तरे स्थापिताः ।" अनन्तरं कुलीरस्तमुवाच, "भो वक ! मामपि तत्र नय ।" ततो वकोऽपि अपूर्वकुलीरमांसार्थी (य) सादरं तं नीत्वा स्थले धृतवान् । कुलीरोऽपि (र) मत्स्यकण्टकाकीर्णां भूमिं दृष्ट्वा अचिन्तयत् । "हा ! हतोऽस्मि मन्दभाग्यः । भवतु, इदानीं समयोचितं (ल) व्यवहरामि ।

यतः, तावद्भयात् तु भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रवर्त्तव्यमभीतवत् ॥ १७ ॥

---

(१६) उपकर्त्रेति । उपकर्त्रा उपकारकेण अरिणा शत्रुणा सन्धिः कर्त्तव्य इति शेषः, अपकारिणा मित्रेणापि न कर्त्तव्य इति शेषः । कुतः यतः उपकारापकारौ एतयोः मित्रामित्रयोः लक्ष्यं विशेष्यः लक्षणं विशेषकम् । उपकारेण अपकारेण च मित्रामित्रे परिज्ञायेते इत्यर्थः ।

(य) अपूर्वकुलीरमांसार्थी—अपूर्वम् अनास्वादितपूर्वं यत् कुलीरमांसं तदर्थयते यः स तथोक्तः ।

(र) मत्स्यकण्टकाकीर्णा—मत्स्यास्थिसङ्कुलाम् ।

(ल) समयोचितं—यथोपस्थितम् ।

(१७) तावदिति । यावत् यावत्कालं भयं भयकारणम् अनागतम् अनुपस्थितं तावत् भयात् भेतव्यं, तु किन्तु भयम् आगतम् उपस्थितं दृष्ट्वा अभीतवत् निर्भीक इव प्रवर्त्तव्यम् आचरितव्यम् ।

अपरञ्च, अभियुक्तो यदा पश्येन्न किञ्चिद्धितमात्मनः।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह॥" १८॥

इत्यालोच्य स कुलीरस्तस्य वकस्य ग्रीवां चिच्छेद। अथ स वकः पञ्चत्वं गतः। अतोऽहं ब्रवीमि। "भक्षयित्वा बहून् मत्स्यानित्यादि।" ततः पुनरपि राजा चित्रवर्णोऽब्रवीत्, "शृणु तावन्महामन्त्रिन्! मयैतदालोचितम्। तदत्र अवस्थितेन अनेन मेघवर्णेन राज्ञा यावन्ति कर्पूरद्वीपस्य उत्तमवस्तूनि तावन्ति अस्माकम् उपनेतव्यानि (व)। तेन महता विलासेन अस्माभिर्विन्ध्याचले स्थातव्यम्।" दूरदर्शी विहस्याह, "देव!

अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा" ॥ १९॥

राजा आह, "कथमेतत्?" दूरदर्शी कथयति। "अस्ति देवकोट्टनगरे देवशर्मा नाम ब्राह्मणः। तेन (श)विषुवत्संक्रान्तौ सक्तुपूर्णशरावः प्राप्तः। ततस्तमादाय असौ (ष) भाण्डपूर्णकुम्भकारमण्डपिकायां रौद्रेणाकुलितः सुप्तः। ततः शक्तुरक्षार्थं हस्ते दण्डमादाय अचिन्तयत्। "यदि अहमिमं शक्तुशरावं विक्रीय दश कपर्दकान् प्राप्नोमि तदा तैरिह समये कपर्दकैर्घटशरा-

---

(१८) अभियुक्त इति। प्राज्ञः पण्डितो जनः यदा यस्मिन् काले अभियुक्तः आक्रान्तः आत्मनः स्वस्य हितं न पश्येत् तदा रिपुणा शत्रुणा सह युध्यमानः सन् म्रियेत प्राणांस्त्यजेत्।

(व) उपनेतव्यानि—उपहर्त्तव्यानि।

(१९) अनागतवतीमिति। यस्तु जनः अनागतवतीं भविष्यत्सुखविषयिणीं चिन्तां कृत्वा प्रहृष्यति सन्तुष्यति आशामात्रमवलम्ब्य आत्मानं निश्चिन्तं मन्येत सः भग्नभाण्डः भग्नमृत्पात्रः द्विजो यथा विप्र इव तिरस्कारं विषादम् आप्नोति लभते।

(श) विषुवत्संक्रान्तौ—चैत्रसंक्रान्त्याम्।

(ष) भाण्डपूर्णकुम्भाकारमण्डपिकायां—मृत्पात्रपूर्णकुम्भकारगृहे।

द्यादिकमुपक्रीय अनेकधा (स) वृद्धैस्तैर्धनैः पुनः पुनः पूगवस्त्रा-
दिकमुपक्रीय विक्रीय वाणिज्यं कृत्वा लक्षसंख्यकधनानि
उत्पाद्य विवाहचतुष्टयं करोमि। ततस्तासु पत्नीषु या रूप-
यौवनवती तस्यामधिकानुरागं करोमि। तदनन्तरं (ह)सञ्जाते-
र्ष्यास्ताः सपत्न्यः अन्योऽन्यं यदा (च) द्वन्द्वं करिष्यन्ति तदाऽहं
(क) कोपाकुलः सर्वाः सपत्नीर्लगुडेन ताड़यिष्यामि।" इत्यभि-
धाय तेन लगुड़ः प्रक्षिप्तः शक्तुशरावश्चूर्णितो भाण्डानि च
भग्नानि। ततो भग्नभाण्डशब्दश्रवणादागत्य कुम्भकारेण
गले हस्तं दत्त्वा मण्डपिकाद्बहिष्कृतः। अतोऽहं ब्रवीमि, अना-
गतवतीं चिन्तामित्यादि।" ततो राजा रहसि गृध्रं मन्त्रिणं
पप्रच्छ। "तात! यथा कर्त्तव्यं तथा उपदिश।" गृध्रो वदति,

"मदोद्धतस्य नृपतेः प्रकीर्णस्येव दन्तिनः।
गच्छन्त्युन्मार्गयातास्तस्य नेतारः खलु वाच्यताम्॥ २०॥

शृणु तावद् देव! किमस्माभिर्बलदर्पात् (ख) दुर्गं भग्नं?
नो वा भवतः (ग) प्रतापाधिष्ठितेन उपायेन?" राजाह,
"भवतामुपायेन"। गृध्रो ब्रूते, "यद्यस्मद्वचनं क्रियते तदा

---

(स) वृद्धैः—वृद्धिं प्राप्तैः।

(ह) सञ्जातेर्ष्याः—सञ्जाता उत्पन्ना ईर्ष्या विद्वेषभावः यासां ताः।

(च) द्वन्द्वं—कलहम्।     (क) कोपाकुलः—क्रोधाभिभूतः।

(२०) मदोद्धतस्येति। प्रकीर्णस्य मदस्राविणः मदमत्तस्येत्यर्थः। दन्तिनः
हस्तिन इव मदोद्धतस्य मदगर्वितस्य तस्य नृपतेः राज्ञः नेतारः नायकाः एकत्र
हस्तिपकाः अन्यत्र मन्त्रिणः खलु निश्चितम् उन्मार्गगाः कुनीतिमार्गप्रस्थिताः सन्तः
अन्यत्र विपथगामिन इत्यर्थः। वाच्यतां निन्दनीयतां गच्छन्ति प्राप्नुवन्ति निन्दनीया
भवन्तीति शेषः।

(ख) बलदर्पात्—सामर्थ्यमात्रमवलम्ब्य।

(ग) प्रतापाधिष्ठितेन—प्रभावातिशयरूपेणोपायेन।

स्वदेशे गम्यताम्। अन्यथासन्ने (घ) वर्षाकाले (ङ) तुल्यबलेन सह पुनर्विग्रहे सति अस्माकं परभूमिष्ठानां (च) स्वदेशगमनमपि दुर्लभं भविष्यति। (छ) सुखशोभार्थं सन्धाय गम्यताम्। दुर्गं भग्नं, कीर्त्तिश्च लब्धैव। मम सम्मतं तावदेतत्।

यतः, यो हि धर्मं पुरस्कृत्य हित्वा भर्त्तुः प्रियाप्रियम्।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान्॥ २१॥

अपरञ्च, सन्धिमिच्छेत् समेनापि सन्दिग्धो विजयो युधि।
न हि संशयितं कुर्य्यात् इत्युवाच बृहस्पतिः॥ २२॥

अन्यच्च, सुहृद्बलं तथा राज्यमात्मानं कीर्त्तिमेव च।
युधि सन्देहदोलस्थं को हि कुर्य्यादबालिशः॥ २३॥

---

(घ) आसन्ने—उपस्थिते।

(ङ) तुल्यबलेन—समसामर्थ्येन प्रतिद्वन्द्विनेति यावत्।

(च) परभूमिष्ठानाम्—अपरराज्यस्थितानाम्।

(छ) सुखशोभार्थं—सुखं मनःशान्तिः शोभा राज्यस्य निरुपद्रवजनितं गौरवं ते अर्थः प्रयोजनं यस्मिन् तत्।

(२१) य इति। यो मन्त्री भर्त्तुः स्वामिनः प्रियाप्रियम् अभिमतानभिमतं हित्वा त्यक्त्वा भर्त्रा कृतमनुचितमादेशमुपेक्ष्येत्यर्थः धर्मं पुरस्कृत्य कर्त्तव्यानुष्ठानरूपं धर्मम् अनुसृत्य अप्रियाणि अमनोहराण्यपि पथ्यानि हितानि आह उपदिशति तेन तादृशेन मन्त्रिणा राजा सहायवान् स एव प्रकृतः कार्य्यसहायः। हितं मनोहारि च दुर्लभं वच इति भावः।

(२२) सन्धिमिति। समेनापि तुल्यबलेनापि किमुताधिकबलेनेति भावः। सन्धिं मिलनं कुर्य्यात्। कुतः यतः युधि युद्धे विजयः सन्दिग्धः संशयारूढः अनिश्चित इति यावत्। संशयितं संशयारूढं कार्य्यं न हि कुर्य्यात् इति बृहस्पतिः नीतिशास्त्रकृत् देवगुरुः उवाच उपदिदेश।

(२३) सुहृदिति। सुहृत् मित्रं तेन बलं सैन्यं तथा राज्यम् आत्मानं स्वजीवनं कीर्त्तिं यशः को हि अबालिशः अमूर्खः पण्डित इति यावत् युधि युद्धे सन्देहदोलस्थं संशयदोलायमानं कुर्य्यात् न कोऽपीत्यर्थः।

परन्तु, युद्धे विनाशो भवति कदाचिदुभयोरपि ।
सुन्दोपसुन्दावन्योऽन्यं समवीर्य्यौ हतौ न किम् ?" ॥२४॥

राजा उवाच, "कथमेतत् ?" मन्त्री कथयति, "पुरा दैत्यौ सहोदरौ सुन्दोपसुन्दनामानौ महता कायक्लेशेन (ज) त्रैलोक्य-राज्यकामनया चिरात् (झ) चन्द्रशेखरम् आराधितवन्तौ। ततस्तयोर्भगवान् परितुष्टः सन् "वरं वरयतम्" इति उवाच। अनन्तरं तयोः (ञ) समधिष्ठितया सरस्वत्या तौ अन्यद्वक्तुकामौ अन्यदभिहितौ। "यदि आवयोर्भगवान् परितुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु।" अथ भगवता क्रुद्धेन वरदानस्य आवश्यकतया (ट) मूढ़तया च पार्वती प्रदत्ता। ततस्तस्याः (ठ) रूपलावण्यलब्धाभ्यां (ड) जगद्घातिभ्यां मनसोत्सुकाभ्यां (ढ) पापतिमिराभ्यां मम इति अन्योऽन्यकलहाभ्यां (ण) "प्रमाणपुरुषः कश्चित् पृच्छतामिति (त) मतौ (थ) कृतायां स (द) भट्टारको वृद्धद्विजरूपो समागत्य तत्र उपस्थितः। अनन्तरम् "आवाभ्याम्

---

(२४) युद्ध इति। कदाचित् युद्धे समरे उभयोरपि युध्यमानयोर्द्वयोरपि विनाशः जीवनत्यागः भवति। समं तुल्यं वीर्य्यं पराक्रमः ययोस्तौ समकक्षौ सुन्दोपसुन्दौ तदाख्यौ द्वावसुरौ किं न हतौ ? विनाशितौ किम् ?

(ज) त्रैलोक्यराज्यकामनया—त्रिभुवनाधिपत्यलाभेच्छया।

(झ) चन्द्रशेखरं—चन्द्रमौलिं शिवम्।

(ञ) समधिष्ठितया—आविष्टया। (ट) मूढ़तया—कोपाभिभूततया।

(ठ) रूपलावण्यलब्धाभ्यां—रूपलावण्यजनिताभ्याम्।

(ड) जगद्घातिभ्यां—जगद्विनाशकाभ्याम्।

(ढ) उत्सुकाभ्याम्—उत्कटेच्छाधीनाभ्याम्।

(ण) प्रमाणपुरुषः—मध्यस्थः विवादनिर्णायक इति यावत्।

(त) मतौ—मध्यस्थाभिप्राये। (थ) कृतायां—निश्चितायाम्।

(द) भट्टारकः—प्रभुः महेश्वरः।

इयं स्वबललब्धा कस्य इयमावयोर्भवति" इति ब्राह्मणमपृच्छताम्। ब्राह्मणो ब्रूते,

"ज्ञानश्रेष्ठो द्विजः पूज्यः क्षत्त्रियो बलवानपि।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ २५ ॥

तद्युवां क्षत्त्रियधर्माणौ युद्ध एव युवयोर्नियमः।" (ध) इति अभिहिते सति साधूक्तमनेनेति कृत्वा अन्योऽन्यतुल्यवीर्यौ समकालेऽन्योन्यघातेन विनाशमुपगतौ। अतोऽहं ब्रवीमि "सन्धिमिच्छेत् समेनापीत्यादि।" राजा आह, "तत् किं प्रागेव नेदम् उपदिष्टम्। मन्त्री वदति, "तदा किं मम वचनम् अवसानपर्य्यन्तं (न) श्रुतं भवद्भिः? तदापि मम सम्मत्या नायं विग्रहारम्भः। यतः (प) सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः। तथा चोक्तम्,

सत्यार्य्यौ धार्मिकोऽनार्य्यो भ्रातृसङ्घातवान् बली।
अनेकयुद्धविजयी सन्धेयाः सप्त कीर्त्तिताः ॥ २६ ॥
सत्योऽनुपालयन् सत्यं सन्धितो नैति विक्रियाम्।

---

(२५) ज्ञानश्रेष्ठ इति। द्विजः ज्ञानेन विद्यया श्रेष्ठः प्रधानः सन् पूज्यः पूजनीयः बलवान् विक्रान्तः क्षत्रियोऽपि सर्वत्र पूज्य इत्यनेनान्वयः। धनधान्याधिकः धनेन सम्पदा धान्येन पण्यद्रव्येण अधिकः समृद्धः वैश्यः, द्विजसेवया विप्रशुश्रूषया शूद्रः।

(ध) नियमः—निश्चायकः। (न) अवसानपर्य्यन्तं—परिसमाप्तिपर्य्यन्तम्।

(प) सन्धेयगुणयुक्तः—सत्यार्य्यादिगुणसम्पन्नः सर्वथा सन्धिस्थापनयोग्यः।

(२६) सत्येति। सत्यः सत्यपरायणः आर्य्यः सदाचारः धार्मिकः धर्मपरायणः अनार्य्यः असदाचारः दुष्टप्रकृतिरिति यावत्। भ्रातृसङ्घातवान् सौभ्रात्रेण मिलितः बली प्रभूतबलवीर्य्यसम्पन्नः। अनेकेषु बहुषु युद्धेषु विजयते यः स यथोक्तः बहुषु समरेषु प्राप्तजयः। एते सप्त सन्धेया सन्धिस्थापनयोग्याः कीर्त्तिताः कथिताः।

(२७) सत्य इति। सत्यः सत्यपरायणः सत्यम् अनुपालयन् अनुसरन् सन्धितः

प्राणबाधेऽपि सुव्यक्तमार्य्यो नायात्यनार्य्यताम् ॥ २७ ॥
धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते ।
प्रजानुरागाद्धर्माच्च दुःखच्छेद्यो हि धार्मिकः ॥ २८ ॥
सन्धिः कार्य्योऽप्यनार्य्येण विनाशे समुपस्थिते ।
विना तस्याश्रयेणान्यः कुर्य्यान्न कालयापनम् ॥ २९ ॥
संहतत्वाद्यथा वेणुर्निविड़ः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा ॥ ३० ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ ३१ ॥
जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा ।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥ ३२ ॥

---

कृतसन्धिः सन् अथवा सन्धितः सन्धिमुपलभ्य ( यवर्थे पञ्चमी तस्यास्तस् ) न विक्रियां सत्वसान्यथा न एति न याति न वैपरीत्यमाचरति। आर्य्यः श्रेष्ठाचारः प्राणबाधेऽपि प्राणनाशेऽपि सुव्यक्तं स्फुटम् अनार्य्यतां नीचाशयतां न आयाति न गच्छति ।

( २८ ) धार्मिकस्येति। अभियुक्तस्य शत्रुभिरुपद्रुतस्य धार्मिकस्य सर्व एव युध्यते युक्तः अनुकूलो भवतीत्यर्थः। धार्मिको राजा प्रजानाम् अनुरागात् स्वामिनि भक्त्या धर्मात् प्रजानुरञ्जनरूपात् सदनुष्ठानात् च दुःखेन छिद्यते यः स तथोक्तः दुर्जयः भवतीति शेषः ।

( २९ ) सन्धिरिति। विनाशे सर्वनाशे समुपस्थिते समुत्पन्ने सति अनार्य्येण नीचाशयेनापि सन्धिः कार्य्यः कर्त्तव्यः तस्य दुष्टस्य आश्रयेण अवलम्बनेन विना कालयापनं कालातिपातं न कुर्य्यात् न जीवितं धारयेत् ।

( ३० ) संहतेति। यथा निविड़ः घनसन्निविष्टः कण्टकैर्वृतः व्याप्तः वेणुर्वंशः संहतत्वात् समुच्छेत्तुं विदारयितुं न शक्यते तथा भ्रातृसङ्घातवान् भ्रातृभिः सह सौभ्रात्रेण मिलितः जनः न समुच्छेत्तुं शक्यते इति शेषः ।

( ३१ ) बलिनेति। बलिना आत्मनोऽधिकबलेन शत्रुणा सह योद्धव्यं विग्रहीतव्यमिति एवं निदर्शनम् उदाहरणम् उपमा नास्ति। घनः मेघः कदाचिदपि प्रतिवातं वायोः प्रतिकूलं न हि उपसर्पति चलति।

( ३२ ) जमदग्नेरिति। जमदग्नेः सुतस्य परशुरामस्य इव अनेकयुद्धविजयिनः

अनेकयुद्धविजयी सन्धानं यस्य गच्छति ।
तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः ॥ ३३ ॥

तदत्र बहुभिर्गुणैरुपेतः (फ) सन्धेयोऽयं राजहंसः । चक्रवाकोऽवदत्, "प्रणिधे! सर्वम् अवगतम्? व्रज पुनरागमिष्यसि। अथ हिरण्यगर्भश्चक्रवाकं पृष्टवान् । "मन्त्रिन्! असन्धेयाः कति। तान् विज्ञातुमिच्छामि।" मन्त्री ब्रूते, "देव! कथयामि ।

शृणु, बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ ३४ ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ ३५ ॥
दैवोपहतकश्चैव दैवचिन्तक एव च ।

---

बहुषु युद्धेषु लब्धजयस्य राज्ञः प्रतापात् प्रभावात् विक्रमादिव्याजेनेत्यर्थः सर्वः जनः सर्वत्र सर्वस्मिन् स्थाने सर्वदा सर्वकाले च भुज्यते परराज्यम् अधिकरोति ।

( ३३ ) अनेकेति । अनेकयुद्धविजयी बहुषु युद्धेषु लब्धजयः पुरुषः यस्य राज्ञः सन्धानं मित्रतां गच्छति येन सह सन्धिं करोति । तत्प्रतापेन तस्य अनेकयुद्धविजयिनः प्रभावेणैव तस्य कृतसन्धेः राज्ञः शत्रवः आशु शीघ्रं वशं वश्यताम् आयान्ति प्राप्नुवन्ति ।

( फ ) उपेतः—अन्वितः ।

( ३४ ) बाल इति । बालः बालकः वृद्धः प्रवयाः दीर्घरोगी चिररोगी तथा ज्ञातिभिः बहिष्कृतः ताड़ितः भीरुकः स्वयं भीरुस्वभावः भीरुकजनो भीरुकः भीतस्वभावः जनः अमात्यादिर्यस्य सः । लुब्धः स्वयम् अर्थलोलुपः लुब्धजनः लुब्धामात्यादिश्च । अमी असन्धेया इति परेणान्वयः ।

( ३५ ) विरक्तेति । विरक्ताः स्वामिनि विरक्तिमापन्नाः प्रकृतयः प्रजाः यस्य स विषयेषु भोगेषु अतिसक्तिमान् अत्यासक्तः अनेकेषां चित्ते मनसि मन्त्रः मन्त्रणा यस्य सः अर्पितमन्त्रः देवब्राह्मणनिन्दकः देवे ब्राह्मणे च अभक्तः ।

दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः॥ ३६॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी॥ ३७॥
एतैः सन्धिं न कुर्वीत विगृह्णीयात् तु केवलम्।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम्॥ ३८॥
बालस्याल्पप्रभावत्वान्न लोको योद्धुमिच्छति।
युद्धायुद्धफलं यस्मात् ज्ञातुं शक्तो न बालिशः॥ ३९॥
उत्साहशक्तिहीनत्वाद् वृद्धो दीर्घामयस्तथा।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम्॥ ४०॥
सुखोच्छेद्यश्च भवति सर्वज्ञातिबहिष्कृतः।
त एवैनं विनिघ्नन्ति ज्ञातयश्चात्मसात्कृताः॥ ४१॥

---

(३६) दैवेति। दैवेन विधिना उपहतकः विफलीकृतसर्वचेष्टः दैवचिन्तकः चेष्टां विना भाग्यपरायणः दुर्भिक्षव्यसनोपेतः दुर्भिक्षरूपविपदा अभिभूतः बलस्य सैन्यस्य व्यसनेन आसङ्गेन पीडादिविपत्त्या च सङ्कुलः व्याकुलः।

(३७) अदेशेति। अदेशस्थः भिन्नराज्यस्थितः बहुरिपुः अनेकशत्रुः यश्च कालेन युद्धोचितसमयेन न युक्तः अप्राप्तावसरः सत्यात् धर्मात् च व्यपेतः च्युतः अमी विंशतिः पुरुषाः।

(३८) एतैरिति। एतैः ईदृशैः शत्रुभिः सह सन्धिं न कुर्वीत केवलं विगृह्णीयात् युध्येत। एते विगृह्यमाणाः युध्यमानाः सन्तः हि निश्चितं क्षिप्रं शीघ्रं रिपोः शत्रोर्वशं यान्ति गच्छन्ति।

(३९) बालस्येति। बालस्य बालकस्य अल्पप्रतापत्वात् क्षुद्रप्रभावत्वात् लोकः योद्धुं तेन सह विग्रहीतुं न इच्छति अभिलषति। यस्मात् स बालिशः अनभिज्ञः बालः युद्धायुद्धफलं युद्धकरणाकरणफलं ज्ञातुं विदितुं न शक्तः समर्थः।

(४०) उत्साहेति। वृद्धः तथा दीर्घामयः चिररोगी जनः एतौ द्वौ उत्साहशक्तिहीनत्वात् वार्द्धक्यजनितदौर्बल्यात् असंशयं निश्चितं स्वैरेव आत्मनैव परिभूयेते पराजीयेते।

(४१) सुखेति। सर्वज्ञातिबहिष्कृतः ज्ञातिभिः ताड़ितः रिपुः सुखच्छेद्यः

भीरुर्युद्धपरित्यागात् स्वयमेव प्रणश्यति ।
तथैव भीरुकजनः संग्रामे तैर्विमुच्यते ॥ ४२ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः ।
लुब्धानुजीविकैरेष दानहीनैर्निहन्यते ॥ ४३ ॥
सन्त्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेष्वतिसन्निमान् ॥ ४४ ॥
अनेकचित्तमन्त्रस्तु द्वेष्यो भवति मन्त्रिणाम् ।
अनवस्थितचित्तत्वात् कार्य्ये तैः स उपेक्ष्यते ॥ ४५ ॥
सदा धर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।
विशीर्य्यते स्वयं ह्येव दैवोपहतकस्तथा ॥ ४६ ॥

---

अनायासेन उन्मूलयितुं शक्यः भवति । यतः ते ज्ञातय एव आत्मसात् कृताः अस्य धनादिकं गृहीत्वा एनं विनिघ्नन्ति नाशयन्ति ।

( ४२ ) भीरुरिति । भीरुः भीतस्वभावः युद्धपरित्यागात् युद्धपराङ्मुखत्वात् स्वयमेव प्रणश्यति तथैव तद्वदेव भीरुकजनः तैः स्वपक्षीयैः जनैः संग्रामे युद्धे विमुच्यते त्यज्यते ।

( ४३ ) लुब्धेति । असंविभागात् अयथायथविभागेन लुब्धस्य लोभपरवशस्य स्वामिनः अनुजीविनः सैनिका न युध्यन्ते युद्धं कुर्वन्ति । लुब्धाः धनलोलुपाः अनुजीविनः तैः दानहीनैः अपुरस्कृतैः सद्भिः एषः स्वामी हन्यते विनाश्यते त्यज्यते इत्यर्थः ।

( ४४ ) सन्त्यज्यत इति । विरक्ताः विकृतिमापन्नाः प्रकृतयः प्रजाः यस्य सः तथाभूतः प्रकृतिभिः प्रजाभिः सन्त्यज्यते विहीयते । विषयेषु विषयभोगेषु अतिसक्तिमान् अत्यासक्तः सुखाभियोज्यः सुखेन अनायासेन अभियोज्यः पराभवनीयः भवति ।

( ४५ ) अनेकेति । अनेकचित्तमन्त्रः बहुजनज्ञातमन्त्रः नृपतिः मन्त्रिणां सचिवानां द्वेष्यः विद्वेषभाजनं भवति । अनवस्थितत्वात् अव्यवस्थितचित्तत्वात् कार्य्ये तैः मन्त्रिभिः स राजा उपेक्ष्यते त्यज्यते ।

( ४६ ) सदेति । धर्मबलीयस्त्वात् धर्मबलत्वात् यतो धर्मः ततो जय इति;

सम्पत्तेश्च विपत्तेश्च दैवमेव हि कारणम्।
इति दैवपरो ध्यायन् नात्मानमपि चेष्टयेत्॥ ४७॥
दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते॥ ४८॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति॥ ४९॥
बहुशत्रुस्तु सन्त्रस्तः श्येनमध्ये कपोतवत्।
येनैव गच्छति पथा तेनैवासौ विपद्यते॥ ५०॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना।
कौशिकेन हतज्योतिर्निशीथ इव वायसः॥ ५१॥

---

स्थिते इत्यर्थः। देवब्राह्मणनिन्दकः देवविप्राणाम् अवज्ञाकारी अधार्मिक इत्यर्थः तथा दैवोपहतकः दैवपरायणश्च राजा स्वयमेव आत्मनैव विशीर्य्यते अवसीदति।

(४७) सम्पत्तेरिति। सम्पत्तेः सम्पदः विपत्तेः विपदश्च दैवमेव कारणं हेतुः इति ध्यायन् चिन्तयन् दैवपरः दैवमात्रावलम्बी जनः आत्मानमपि न चेष्टयेत् न कार्य्येषु नियोजयेत् प्रत्युत अलसो भवति।

(४८) दुर्भिक्षेति। दुर्भिक्षव्यसनी दुर्भिक्षपीड़ितप्रजः स्वयमेव आत्मनैव अवसीदति दुर्बलो भवति। बलव्यसनयुक्तस्य सैन्यव्यसनेन व्यसनिनः योद्धुं शक्तिः सामर्थ्यं न जायते न भवति।

(४९) अदेशस्थ इति। अदेशस्थः अपरराज्यस्थितः राजा स्वल्पकेनापि क्षुद्रेणापि रिपुणा हन्यते बध्यते। अथ दृष्टान्तमाह। अल्पीयान् क्षुद्रोऽपि जलजन्तुः जले निजस्थाने स्थितः सन् गजेन्द्रमपि मत्तगजमपि कर्षति पराजयते।

(५०) बह्विति। बहुशत्रुषु बहुसंख्यकेषु शत्रुषु मध्ये सन्त्रस्तः भीतः जनः श्येनमध्ये कपोतवत् कपोत इव येनैव पथा मार्गेण गच्छति तेनैव पथा असौ सन्त्रस्तः विपद्यते विपन्नो भवति।

(५१) अकाल इति। अकाले युद्धस्यानुचितसमये वर्षादौ सैन्यैः सेनाभिः युक्तः अन्वितः कालयोधिना यथोचितकाले युध्यते यः तेन निशीथे अर्द्धराते हतज्योतिः

सत्यधर्मव्यपेतेन न सन्दध्यात् कदाचन ।
स संहितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ ५२ ॥

अपरमपि कथयामि, (व) सन्धिविग्रहासनयानसंश्रयद्वैधीभावाः षाड्गुण्यम् । कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पद्, देशकालविभागो, विनिपातप्रतीकारः, कार्य्यसिद्धिः, पञ्चाङ्गो मन्त्रः । सामदानभेददण्डाश्चत्वार उपायाः । उत्साहशक्तिः मन्त्रशक्तिः प्रभुशक्तिरिति शक्तित्रयम् । एतत्सर्वम् आलोच्य नित्यं विजिगीषवो भवन्ति महान्तः ।

यतः, या हि प्राणपरित्यागमूल्येनापि न लभ्यते ।
सा श्रीर्नीतिविदां वेश्म चञ्चलापि प्रधावति ॥ ५३ ॥

तथा चोक्तम्, वित्तं यदा यस्य समं विभक्तं
गूढ़श्च चारो निभृतश्च मन्त्रः ।
न चाप्रियं प्राणिषु यो ब्रवीति
स सागरान्तां पृथिवीं प्रशास्ति ॥ ५४ ॥

---

विनष्टदर्शनशक्तिः वायसः काकः कौशिकेन पेचकेनेव हन्यते अनायासेनैव पराभूयते इत्यर्थः ।

(५२) सत्येति । कदाचन कस्मिंश्चिदपि काले सत्यधर्मव्यपेतेन सत्यात् धर्माच्च भ्रष्टेन सह न सन्दध्यात् सन्धिं कुर्य्यात् स सत्यधर्महीनः संहितः सन्धिना सन्धैः मिलितोऽपि असाधुत्वात् पापशीलत्वात् अचिरात् शीघ्रमेव विक्रियां वैपरीत्यं सहायहीनत्वमिति यावत् याति प्राप्नोति ।

(व) सन्धिरिति—सन्धिः मैत्रीभावः, विग्रहः युद्धम्, आसनं कालापेक्षा, यानं यात्रा, संश्रयः आश्रयग्रहणं, द्वैधीभावः छलम् ।

(५३) येति । या श्रीः लक्ष्मीः प्राणत्यागः जीवनोत्सर्गः एव मूल्यं तेनापि न न लभ्यते प्राप्यते सा श्रीः चञ्चलापि स्वभावचपलापि नीतिविदां नीतिशास्त्रानुसारेण कार्य्यं कुर्वतां वेश्म गृहम् उद्दिश्य प्रधावति तत्र स्थिरा तिष्ठतीत्यर्थः ।

(५४) वित्तमिति । यस्य राज्ञः यदा यस्मिन् समये वित्तं धनं समं तुल्यं

किन्तु देव! यद्यपि महामन्त्रिणा गृध्रेण सन्धानमुपन्यस्तं (भ) तथापि तेन राज्ञा सम्प्रति भूतजयदर्पात् न मन्तव्यम्। तदेवं क्रियताम्। अस्मन्मित्रं सिंहलद्वीपस्य महाबलो नाम सारसो राजा जम्बुद्वीपे कोपं जनयतु। यतः,

सुगुप्तिमाधाय सुसंहतेन बलेन वीरो विचरन्नरातिम्।
सन्तापयेद्येन समं सुतप्तस्तप्तेन सन्धानमुपैति तप्तः" ॥५५॥

राजाह, "एवमस्तु" इति उक्त्वा विचित्रो नाम बकः सुगुप्तलेखं (म) दत्त्वा सिंहलद्वीपं प्रस्थापितः। अथ प्रणिधिः पुनरागत्य उक्तवान् "देव! श्रूयतां तावत् तत्रत्यप्रस्तावः। एवं तत्र गृध्रेणोक्तम्। "देव! मेघवर्णस्तत्र चिरमुषितः। स वेत्ति किं सन्धेयगुणयुक्तो हिरण्यगर्भो राजा न वेति।" ततोऽसौ मेघवर्णश्चित्रवर्णेन राज्ञा समाहूय पृष्टः। "वायस! कीदृशोऽसौ हिरण्यगर्भो राजा? चक्रवाको मन्त्री वा कीदृशः?" मेघवर्णो ब्रूते, "देव! स हिरण्यगर्भो राजा युधि-

---

विभक्तं यथायथविभागेन अनुजीविभ्यः दत्तं चारः दूतश्च गूढः गूढभावेन अनुसन्दधानः मन्त्रश्च निभृतः गुप्तः नान्यसन्निधौ प्रकाशितः, यश्च प्राणिषु जनेषु अप्रियं परुषं न ब्रवीति कथयति स सागरान्तां ससागरां पृथिवीं शास्ति पालयति सः सम्राट् भवतीत्यर्थः। उपजातिवृत्तम्।

(भ) उपन्यस्तं—प्रस्तुतम्।

(५५) सुगुप्तिमिति। वीरः विक्रान्तो राजा सुगुप्तिं गूढभावम् आधाय अवलम्ब्य अतीव रहसि इत्यर्थः। सुसंहतेन अनुरक्तेन समवेतेन च बलेन अरातिं शत्रुं विचरन् आक्रमन् सन्तापयेत् पीड़येत् येन पीड़नेन समं तुल्यं सुतप्तः अवकम्पितः भवतीति शेषः। कुत इत्याह यतः तप्तः उग्रत्वमापन्नः तप्तेन उत्तेजितेन सह सन्धानं सन्धिम् उपैति लभते। तुल्यबलः अनायासेन सन्धेयो भवतीत्यर्थः। उपजातिवृत्तम्।

(म) सुगुप्तलेखं—गूढ़पत्रिकाम्।

स्थिरसमो महाशयः सत्यवाक्। चक्रवाकसदृशो मन्त्री न क्वापि अवलोक्यते।" राजाह, "यद्येवं तदा कथमसौ त्वया वञ्चितः। मेघवर्णो विहस्य ब्रूते,

"देव! विश्वासप्रतिपन्नानां वञ्चने का विदग्धता?।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम्?॥ ५६॥

शृणु देव! "तेन मन्त्रिणा अहं प्रथमदर्शन एव विज्ञातः। किन्तु महाशयः असौ राजा। तेन मया विप्रलब्धः।
तथा चोक्तम्, आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम्।
स एव वञ्चितस्तेन ब्राह्मणश्छागतो यथा"॥ ५७॥

राजाह, "कथमेतत्?" मेघवर्णः कथयति, "अस्ति गौतमारण्ये (य) प्रस्तुतयज्ञः कश्चिद् ब्राह्मणो ग्रामान्तरं गत्वा छागमुपक्रीय स्कन्धे धृत्वा गच्छन् धूर्तत्रयेण अवलोकितः। ततस्ते धूर्ता "यदि एष छागः केनापि उपायेन लभ्यते? तदा मतिप्रकर्षो भवति" इति आलोच्य प्रान्तरवृक्षत्रयतले तस्य ब्राह्मणस्य वर्त्मनि उपविश्य स्थिताः। तत्र एकेन धूर्त्तेन स ब्राह्मणो अभिहितः। "भो ब्राह्मण! किमिति त्वया कुक्कुरः स्कन्धेन उह्यते?" विप्रेण उक्तम्। "नायं श्वा, यज्ञ-

---

(५६) विश्वासेति। विश्वासप्रतिपन्नानाम् अतीवकृतविश्वासानां वञ्चने प्रतारणायां का विदग्धता? नैपुण्यम्? विश्वासघातको हि स्वल्पेनैवोपायेन प्रतारयितुं समर्थ इत्यर्थः। अङ्कं क्रोड़म् आरुह्य आश्रित्य सुप्तं जनम् अतीव विश्वस्तमित्यर्थः हत्वा किं नाम पौरुषं? पुरुषकारः? न किमपीत्यर्थः।

(५७) आत्मौपम्येनेति। आत्मनः स्वस्य उपमा एव औपम्यम् आत्मौपम्यं तेन आत्मतुलनया यो जनः दुर्जनं दुष्टप्रकृतिं सत्यवादिनं वेत्ति जानाति स एव जनः छागतः छागात् ब्राह्मणः यथा ब्राह्मण इव तेन जनेन वञ्चितः प्रतारितः भवतीति शेषः।

(य) प्रस्तुतयज्ञः—आरब्धयागः।

च्छागः अयम्।" अनन्तरं पुनः द्वितीयेन क्रोशमात्रस्थितेन तदेव उक्तम्। तदाकर्ण्य ब्राह्मणश्छागं भूमौ निधाय मुहुर्मुहुः निरीक्ष्य पुनः स्कन्धे कृत्वा दोलायमानमतिश्चलितः।
यतः, मतिर्दोलायते नूनं सतामपि खलोक्तिभिः।
तामिर्विश्वासितो योऽसौ म्रियते चित्रकर्णवत्" ॥ ५८ ॥

राजा पृच्छति "कथमेतत्?" स कथयति, "अस्ति कस्मिंश्चिद् वनोद्देशे मदोत्कटो नाम सिंहः। तस्य अनुचरास्त्रयः, काको व्याघ्रः शृगालश्च। अथ तैर्भ्रमद्भिः स्वार्थाद् भ्रष्ट उष्ट्रो दृष्टः पृष्टश्च। "कुतो भवान् आगतः?" स च आत्मवृत्तान्तम् अकथयत्। ततस्तैर्नीत्वा असौ सिंहाय समर्पितः। तेन च अभयवाचं दत्त्वा चित्रकर्ण इति नाम कृत्वा स्थापितः। एवं काले गच्छति, अथ कदाचित् सिंहस्य शरीरवैकल्यात् भूरिवृष्टिकारणात् च आहारमलभमानास्ते व्यस्ता बभूवुः। ततः काकव्याघ्रगोमायुभिः आलोचितम्। "चित्रकर्णमेव यथा स्वामी व्यापादयति तथा अनुष्ठीयताम्। किमनेन (र) कण्टकभुजा अस्माकम्।" व्याघ्रो ब्रूते, स्वामिना अभयवाचं दत्त्वा गृहीतोऽयम्। कथमेवं सम्भवति?" वायसो वदति। "इह समये परिक्षीणः स्वामी पापमपि करिष्यति।
यतः, त्यजेत् क्षुधार्त्ता महिलापि पुत्रं
खादेत् क्षुधार्त्ता भुजगी स्वमण्डम्।

---

(५८) मतिरिति। नूनं निश्चितं सतां साधूनामपि मतिः बुद्धिः खलोक्तिभिः खलवचनैः दोलायते विचलति यः असौ साधुः ताभिः खलोक्तिभिः विश्वासितः खलवचसि कृतविश्वासः सन् चित्रकर्णवत् चित्रकर्ण इव म्रियते प्रस्तत्वं याति।

(र) कण्टकभुजा—कण्टकमयतृणभोजिना।

(५९) त्यजेदिति। महिलापि स्त्री अपि क्षुधार्त्ता क्षुधाकातरा सती पुत्रमपि

बुभुक्षितः किं न करोति पापं ?
क्षीणा नरा निष्करुणा भवन्ति ॥ ५९ ॥

अन्यच्च, मत्तः प्रमत्तश्चोन्मत्त आर्त्तः क्रोधी बुभुक्षितः।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित्" ॥ ६० ॥

इति निश्चित्य सर्वे सिंहान्तिकं जग्मुः। सिंहेनोक्तम्। "आहारार्थं प्राप्तं किञ्चित्।" काको ब्रूते, "देव! यत्नादपि न प्राप्तं किञ्चित्।" सिंहः अवदत्। "कोऽधुना जीवनोपायः?" काको वदति। "स्वाधीनाहारपरित्यागात् सर्वनाशः अयम् उपस्थितः।" सिंहेन उक्तम्। "अत्राहारः कः? कस्य स्वाधीनः?" काकः कर्णे कथयति। "चित्रकर्ण इति।" सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति। मया अस्मै अभयवाग् दत्ता, तत् कथमेवं सम्भवति? तथा हि,

न भूप्रदानं न सुवर्णदानं न गोप्रदानं न तथान्नदानम्।
यथा वदन्तीह महाप्रदानं सर्वप्रदानेष्वभयप्रदानम् ॥६१॥

---

त्यजेत्। भुजगी सर्पी क्षुधार्त्ता स्वं स्वकीयम् अण्डं खादेत् भक्षयेत्। बुभुक्षितः क्षुधातुरो जनः किं पापं न करोति? आचरति? क्षीणाः बलहीनाः नराः निष्करुणाः निर्दयाः भवन्ति। दुर्बलानामेव पापप्रवृत्तिरधिका जायते इत्यर्थः। उपजातिवृत्तम्।

(६०) मत्त इति। मत्तः विकृतचित्तः प्रमत्तः कार्य्येषु अनवहितः उन्मत्तः वातुलः आर्त्तः विपन्नः क्रोधी कोपनस्वभावः बुभुक्षितः क्षुधातुरः लुब्धः लोलुपः भीरुः भयशीलः त्वरायुक्तः अविमृश्यकारी कामुकः इन्द्रियपरायणश्च धर्मवित् धार्मिको न भवतीति शेषः।

(६१) नेति। इह जगति यथा यद्वत् सर्वप्रदानेषु सर्वविधेषु दानेषु अभयप्रदानम् अभयदानम् आश्रयदानमिति यावत् महादानं महापुण्यजनकं दानं वदन्ति आमनन्ति विद्वांस इति शेषः। तथा भूप्रदानं भूमिदानं न, सुवर्णदानं कनकदानं न, गोप्रदानं गोदानं न, अन्नदानं भोजनदानं न, वदन्तीत्यनेनान्वयः। उपजातिवृत्तम्।

अन्यच्च, सर्वकामसमृद्धस्य अश्वमेधस्य यत् फलम्।
तत् फलं लभते सम्यक् रक्षिते शरणागते ॥ ६२ ॥

काको ब्रूते, "नासौ स्वामिना व्यापादयितव्यः। किन्तु अस्माभिरेव तथा कर्त्तव्यं यथा असौ स्वदेहदानमङ्गीकरोति।" तच्छ्रुत्वा सिंहस्तूष्णीं स्थितः। ततोऽसौ लब्धावकाशः (ल) कूटं कृत्वा सर्वान् आदाय सिंहसमीपम् आगतः। अथ काकेन उक्तम्। "देव! यत्नात् अपि आहारो न प्राप्तः अनेकोपवासक्लिष्टश्च स्वामी। तत् इदानीं मदीयमांसम् उपभुज्यताम्।

यतः, स्वामिमूला भवन्त्येताः सर्वाः प्रकृतयः खलु।
समूलेषु हि वृक्षेषु प्रयत्नः सफलो नृणाम्" ॥ ६३ ॥

सिंहेन उक्तम्। "भद्र! वरं प्राणपरित्यागो न पुनः ईदृशे कर्मणि प्रवृत्तिः।" जम्बूकेन अपि तथोक्तम्। "मैवम्" इति सिंहेन उक्तम्। अथ व्याघ्र उवाच, "मद्देहेन जीवतु स्वामी" सिंहेन उक्तम् "न कदाचित् एवम् उचितम्।" अथ चित्रकर्णोऽपि (व) जातप्रत्ययः तथा एव आत्मदेहदानमाह। तद्वदन् एव असौ द्वीपिना कुक्षिं विदार्य्य व्यापादितः सर्वैः भक्षि-

---

(६२) सर्वेति। सर्वैः सर्वप्रकारैः कामैः अभिलषितैः समृद्धस्य सम्पन्नस्य सर्वाभीष्टप्रदस्य अश्वमेधस्य यत् फलं जायते, शरणागते शरणमापन्ने आर्त्ते सम्यक् सुविशेषेण रक्षिते आपदः मोचिते सति तत् फलं तादृशं पुण्यं लभते प्राप्नोति रक्षक इति शेषः।

(ल) कूटं—व्याजं, कापट्यं छलमिति यावत्।

(६३) स्वामिमूलेति। एताः सर्वाः सकलाः प्रकृतयः प्रजाः खलु निश्चितं स्वामिमूलं स्वामी प्रभुरेव मूलं जीवनरक्षणकारणं यासां ताः स्वामिनि जीवति सर्वा एव प्रजा जीवन्ति। हि तथाहि नृणां नराणां समूलेषु मूलयुक्तेषु वृक्षेषु तरुषु न तु छिन्नमूलेष्विति भावः प्रयत्नः रक्षणप्रयासः सफलः फलप्रदः भवतीति शेषः।

(व) जातप्रत्ययः—काकादीनां वचसि कृतविश्वासः।

तथ। अतोऽहं ब्रवीमि। "मतिर्दोलायते नूनम् इत्यादि।" तदनन्तरं तृतीयधूर्त्तवचनं श्रुत्वा स विप्रो भ्रमं निश्चित्य छागं त्यक्त्वा स्नात्वा गृहं ययौ। छागश्च नीत्वा धूर्त्तैः खादितः। अतोऽहं ब्रवीमि। "आत्मौपम्येन यो वेत्तीत्यादि।" "राजा आह मेघवर्ण! कथं त्वया शत्रुमध्ये सुचिरम् उषितम्। कथं वा तेषाम् अनुनयः कृतः?" मेघवर्ण आह, "देव! स्वामि-कार्य्यार्थिना स्वप्रयोजनवशात् वा किं किं न क्रियते। पश्य,

लोको वहति किं राजन्! न मूर्ध्ना दग्धुमिन्धनम्?।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति ॥ ६४ ॥

तथा चोक्तम्,

स्कन्धेनापि वहेच्छत्रून् कार्य्यमासाद्य बुद्धिमान्।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः" ॥ ६५ ॥

राजा आह, "कथमेतत्?" मेघवर्णः कथयति, "अस्ति जीर्णोद्याने मन्दविसर्पो नाम सर्पः। सोऽतिजीर्णतया स्वाहार-मपि अन्वेष्टुमक्षमः, सरस्तीरे पतित्वा स्थितः। ततो दूरात् केनचित् मण्डूकेन दृष्टः पृष्टश्च, "किमिति भवान् आहारं न अन्विष्यति?" सर्पो ब्रूते, "भद्र! गच्छ किं ते मम मन्द-भाग्यस्य (अ) वृत्तान्तप्रश्नेन?" ततः सञ्जातकौतुकः स भेकः

---

(६४) लोक इति। हे राजन्! दग्धुं दाहार्थम् इन्धनं काष्ठं ज्वलनकाष्ठं किं मूर्ध्ना शिरसा न वहति? दग्धुमेव वहति न तु तत् रक्षितुमित्यर्थः। अन्यदपि उदाहरणं प्रदर्शयति, नदीवेगः नदीस्रोतः वृक्षाङ्घ्रिं वृक्षचरणं वृक्षमूलमित्यर्थः क्षालयन् प्रक्षालयन्नपि पादसेवां कुर्वन्नपीति भावः निकृन्तति उत्पाटयति।

(६५) स्कन्धेनेति। बुद्धिमान् प्राज्ञो जनः कार्य्यं स्वकर्मसिद्धिम् आसाद्य प्राप्य कार्य्यसाधनार्थमित्यर्थः। शत्रून् अरीन् स्कन्धेनापि वहेत् धारयेत् यथा वृद्धेन सर्पेण मण्डूकाः भेकाः विनिपातिताः निहताः।

(अ) वृत्तान्तप्रश्नेन—वार्त्ताजिज्ञासया।

सर्वथा कथ्यतामिति तं सर्पमाह। सर्पो ब्रूते, "भद्र! अत्र ब्रह्मपुरे कौण्डिन्यनाम्नः श्रोत्रियस्य पुत्रो (ष) विंशतिवर्षदेशीयः सर्वगुणसम्पन्नो दुर्दैवात् मया नृशंसेन दष्टः। ततः सुशीलनामानं पुत्रं मृतमवलोक्य कौण्डिन्यः शोकेन मूर्च्छितः पृथिवीतले लुलोठ। अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तस्य तत्र आगत्य उपविष्टाः। तथा चोक्तम्,

'आहवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥ ६६॥

ततः कपिलो नाम (स) स्नातकोऽवदत्, 'अरे कौण्डिन्य! (ह) मूढोऽसि, येन एवं विलपसि।

शृणु, क्रोडीकरोति प्रथमं यदा जातमनित्यता।
धात्रीव जननी पश्चात् तदा शोकस्य कः क्रमः?॥ ६७॥

तथा च, क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति॥ ६८॥

---

(ष) विंशतिवर्षदेशीयः—विंशतिवर्षप्रायः (ईषदूने कल्पदेश्यदेशीया इति देशीयः)।

(६६) आहव इति। आहवे युद्धे व्यसने विपदि दुर्भिक्षे अन्नाभावसमये शत्रुविग्रहे शत्रूणां आक्रमणसमये राजद्वारे विचारालये श्मशाने अन्त्येष्टिकर्मणि च : तिष्ठति यः अनुकूलयति स बान्धवः प्रकृतो बन्धुः।

(स) स्नातकः—ब्रह्मचर्य्यं समाप्य गृहस्थाश्रमं प्रविष्टः।

(ह) मूढः—अविवेकी।

(६७) क्रोडीति। यदा यस्मिन् समये अनित्यता विनश्वरता प्रथमं धात्री त॰ पश्चात् जननी गर्भधारिणी इव जातं नरं क्रोडीकरोति एकत्र विषयीभूत अन्यत्र अङ्कमारोपयति। यदा जातस्य मरणम् अवश्यम्भावीत्यर्थः, तदा शोकस्य कः क्रमः नियमः। अवश्यम्भाविनि विषये शोकं माकार्षीरित्यर्थः।

(६८) क्वेति। सैन्येन सेनया बलेन चतुरङ्गबलेन वाहनैः यानादिभिश्च सह वर्त्तमानाः सैन्यबलवाहनसहिताः पृथिवीपालाः राजानः क्व कुत्र गताः मृता इत्यर्थः।

अपरञ्च, प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।
आमकुम्भ इवाम्भःस्थो विशीर्णः सन् विभाव्यते ॥ ६९ ॥
आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने ।
आघातं नीयमानस्य बध्यस्येव पदे पदे ॥ ७० ॥
यतः, अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
ऐश्वर्यं प्रियसंवासो मुह्येत् तत्र न पण्डितः ॥ ७१ ॥
यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद् भूतसमागमः ॥ ७२ ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत् तद्वद् भूतसमागमः ॥ ७३ ॥

---

येषां पृथिवीपालानां वियोगसाक्षिणी येषामभावेन विपर्यस्तेत्यर्थः भूमिः अद्यापि अधुनापि तिष्ठति वर्त्तते ।

(६९) प्रतिक्षणमिति । अयं कायः शरीरं प्रतिक्षणं प्रतिमुहूर्त्तं क्षीयमाणः क्षयं प्राप्नुवन्नपि न लक्ष्यते तयात्वेन न दृश्यते । प्रत्युत आमकुम्भः वह्निदाहाभावेन अपरिपक्वः अम्भःस्थः जलमध्यस्थः कुम्भः घट इव विशीर्णः विगलितः सन् विभाव्यते स्पष्टं दृश्यते ।

(७०) आसन्नेति । मृत्युः मरणकालः जन्तोः प्राणिनः दिने दिने प्रतिदिनम् आघातं वधार्थं वधसाधनस्थानमित्यर्थः नीयमानस्य प्राप्यमाणस्य पदे पदे प्रतिपदं बध्यस्य वधार्हस्येव आसन्नतरतां क्रमशः सन्निहितत्वम् एति प्राप्नोति । प्रतिदिनमेवायुः क्षीयते इत्यर्थः ।

(७१) अनित्यमिति । यौवनं युवाकालः अनित्यम् अस्थिरं सर्वत्र विभक्तिविपरिणामेनानित्यमित्यनेनान्वयः । रूपं सौन्दर्यं जीवितं प्राणाः द्रव्यसञ्चयः प्रभूतदपि विलासद्रव्यसंग्रहः ऐश्वर्यं सम्यक् प्रियसंवासः प्रियजनैः पुत्रकलत्रादिभिरित्यर्थः एकत्रावस्थितिः । तत्र तेषु पण्डितः विवेकी जनः न मुह्येत् तदर्थं न प्रीयेत ।

(७२) यथेति । यथा महोदधौ महासमुद्रे काष्ठञ्च काष्ठञ्च भासमानाय काष्ठे इत्यर्थः समेयाताम् आत्मनैव संगच्छेयातां समेत्य क्षणं मिलित्वा पुनः व्यपेयाताम् इत्येव वियुज्येतां तद्वत् तथा भूतसमागमः पुत्रादिभिः सह सङ्गमः ।

(७३) यथेति । यथा कश्चित् पथिकः अध्वगः पथि अध्वनि छायाम् आश्रित्य

अन्यच्च, पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ? ॥ ७४ ॥
यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान्।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ७५ ॥
नायमत्यन्तसंवासो लभ्यते येन केनचित्।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ? ॥ ७६ ॥
अपिच, संयोगो हि वियोगस्य संसूचयति सम्भवम्।
अनतिक्रमणीयस्य जन्म मृत्योरिवागमम् ॥ ७७ ॥
आपातरमणीयानां संयोगानां प्रियैः सह।
अपथ्यानामिवान्नानां परिणामो हि दारुणः ॥ ७८ ॥
अपरञ्च, व्रजन्ति न निवर्त्तन्ते स्रोतांसि सरितां यथा।

---

अवलम्ब्य तिष्ठति विश्राम्यति विश्रम्य परिश्रमम् अपनीय पुनः गच्छेत् यायात् तद्वत् तादृशः भूतसमागमः प्रियजनैः सह मिलनमित्यर्थः।

(७४) पञ्चभिरिति। पञ्चभिः क्षित्यादिपञ्चभूतैः निर्मिते आरब्धे देहे शरीरे पुनः पञ्चत्वं क्षित्यादिप्रकृतिं गते प्राप्ते स्वां स्वां योनिं प्रकृतिम् अनुप्राप्ते लब्धे सति तत्र तस्मिन् देहे का परिदेवना विलापः। मरणं प्रकृतिः शरीरिणां विकृतिः जीवितमिति विचिन्त्य तदर्थं न शोकः कर्त्तव्य इत्यर्थः।

(७५) यावत इति। जन्तुः प्राणी यावतः यावत्संख्यकान् मनसः प्रियान् ...म्बन्धान् स्नेहबन्धनानि कुरुते अस्य जन्तोः हृदये मनसि तावन्तः तत्संख्यकाः ...कशङ्कवः शोकरूपशैलानि निखन्यन्ते विध्यन्ते स्नेहानुरूपमेवानुतापं भजन्ते ...र्थः।

(७६) नायमिति। येन केनचित् किमधिकं स्वेन शरीरेणापि अयम् ईदृशः ...न्तसंवासः चिरावस्थानं न लभ्यते प्राप्यते उत भोः कौण्डिन्य ! अन्येन पुत्रादिना ...चित् किं न कथमपि सम्भाव्यते इत्यर्थः।

(७७) संयोग इति। जन्म उत्पत्तिः अनतिक्रमणीयस्य अलङ्घनीयस्य अवश्यभाविन इत्यर्थः मृत्योः मरणस्य आगमम् उपस्थितिमिव संयोगः मिलनं वियोगस्य अवश्यम्भाविन इति भावः सम्भवं समागमं संसूचयति ज्ञापयति।

आयुरादाय मर्त्त्यानां सदा रात्र्यहनी तथा ॥ ७९ ॥
सुखास्वादपरो यस्तु संसारे सत्समागमः ।
स वियोगावसानत्वात् दुःखानां धुरि युज्यते ॥ ८० ॥
अतएव हि नेच्छन्ति साधवः सत्समागमम् ।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ८१ ॥
सुकृतान्यपि कर्माणि राजभिः सगरादिभिः ।
अथ तान्येव कर्माणि ते चापि प्रलयं गताः ॥ ८२ ॥
सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य ।

---

(७८) आपातेति । अपथ्यानाम् अहितकराणाम् अन्नानां भोज्यवस्तूनाम् इव आपातरमणीयानां क्षणप्रीतिप्रदानां प्रीत्या क्षणोपभोगक्षमाणामित्यर्थः प्रियैः सह पुत्रादिप्रियजनैः सह संयोगानां मिलनानां परिणामः चरमः दारुणः भीषणः असुखजनको भवतीति शेषः ।

(७९) व्रजन्तीति । यथा सरितां नदीनां स्रोतांसि प्रवाहाः व्रजन्ति गच्छन्ति न निवर्त्तन्ते प्रत्यागच्छन्ति, तथा सर्वदा रात्र्यहनी रात्रिश्च दिवा च मर्त्त्यानां प्राणिनाम् आयुः जीवितं जीवनकालमित्यर्थः आदाय गृहीत्वा गच्छतः व्रजतः न निवर्त्तेते इति पूर्वेणान्वयः ।

(८०) सुखेति । संसारे भूतले यस्तु सत्समागमः साधुसङ्गः सुखास्वाद परमसुखास्पदं स हि सत्समागमः वियोगावसानत्वात् वियोगपरिणामत्वात् दुःखानां दुःखसमूहानां धुरि अग्रे युज्यते स एव चरमे दुःखदायको भवतीत्यर्थः ।

(८१) अत इति । अतएव दुःखपरिणामत्वादेव साधवः विवेकिनः सत्समागमं साधुसङ्गं प्रियसङ्गमिति यावत् न इच्छन्ति अभिलषन्ति । येन सह [illegible] यद्वियोगः स एव असिः खड्गः तेन लूनस्य छिन्नस्य यद्वियोगार्त्तस्येत्यर्थः मनसः [illegible] भेषजम् औषधं नास्ति न विद्यते ।

(८२) सुकृतान्यपीति । सगरः सूर्य्यवंशीयो नृपतिविशेषः स एवादिर्येषां तैः महाबलसम्पन्नैर्नरपतिभिः सुकृतानि सुसम्पादितान्यपि कर्माणि अश्वमेधाद्यनुष्ठानानि अथ तान्येव कर्माणि ते राजानश्च प्रलयं नाशं गताः इत्यर्थः ।

वर्षास्बु सिक्ता इव चर्मबन्धाः
सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ ८३ ॥

यामेव रात्रिं प्रथमामुपैति गर्भे निवासं नरवीरलोकः।
ततः प्रभृत्यस्खलितप्रयाणः स प्रत्यहं मृत्युसमीपमेति ॥८४॥

अथ संसारं विचारय शोकोऽयमज्ञानस्य प्रपञ्चः (च)।

पश्य, अज्ञानं कारणं न स्याद् वियोगो यदि कारणम्।
शोको दिनेषु गच्छत्सु वर्द्धतामपयाति किम्? ॥ ८५ ॥

तद्भद्र! आत्मानमनुसन्धेहि(क) शोकचर्चां(ख) च परिहर।

यतः, अकाण्डपातजातानामस्त्राणां मर्मभेदिनाम्।
गाढ़शोकप्रहाराणामचिन्तैव महौषधम्" ॥ ८६ ॥

---

(८३) सञ्चिन्त्येति। उग्रदण्डं तीव्रशासनं मृत्युं सञ्चिन्त्य सञ्चिन्त्य पुनः पुनर्मनसि ध्यात्वा, विचक्षणस्य विदुषः अपि मनुष्यस्य सर्वे प्रयत्नाः प्रयासाः वर्षाम्बुसिक्ताः वर्षाजलार्द्राः चर्मबन्धाः चर्मग्रन्थय इव शिथिलीभवन्ति विश्लथा भवन्ति। निर्ममाः भवितुं यतन्ते इत्यर्थः। इन्द्रवज्रावृत्तम्।

(८४) यामिति। नरवीरलोकः नरेषु मध्ये वीरो जनः यामेव प्रथमां रात्रिं गर्भे निवासं वसतिम् उपैति प्राप्नोति ततः प्रभृत्येव जन्मदिनमारभ्य अस्खलितप्रयाणः अस्खलितगतिः सन् स नरवीरः प्रत्यहं प्रतिदिनं मृत्युसमीपं मृत्योः अन्तिकम् एति गच्छति। उपजातिवृत्तम्।

(च) अज्ञानस्य प्रपञ्चः—मोहस्य विस्तृतिः।

(८५) अज्ञानमिति। यदि वियोग एव कारणं दुःखस्य हेतुः अज्ञानं मोहः न स्यात् भवेत् तदा दिनेषु गच्छत्सु प्रतिदिनमित्यर्थः शोको वर्द्धतां वृद्धिं किं किमर्थं शोकः अपयाति अपगच्छति, न कथमपीत्यर्थः। अतः अज्ञानमेव कारणमिति भावः।

(क) अनुसन्धेहि—स्थिरीकुरु। विचिन्तय।

(ख) शोकचर्चां—शोकाभिभूतताम्।

(८६) अकाण्डेति। अकाण्डे असमये पातः पतनं तेन जातानाम् अचिन्तितपूर्वाणां गाढ़शोकप्रहाराणां तीव्रशोकाघातानां मर्मभेदिनां मर्मविदारकाणाम् अस्त्राणामिव अचिन्तैव अनालोचनेव महौषधं प्रधानं भेषजम्।

ततस्तद्वचनं निशम्य (ग) प्रबुद्ध एव कौण्डिन्य उत्थाय अब्रवीत्। "तदलम् इदानीं गृहनरकवासेन, वनं गच्छामि"। पुनः कपिलो ब्रूते,

"वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
अकुत्सिते कर्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम्॥ ८७॥

यतः, दुःखितोऽपि चरेद्धर्मं यत्र कुत्राश्रमे रतः।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम्॥ ८८॥

उक्तञ्च, वृत्त्यर्थं भोजनं येषां सन्तानार्थञ्च मैथुनम्।
वाक् सत्यवचनार्थञ्च दुर्गाण्यपि तरन्ति ते॥ ८९॥

तथा हि,
आत्मा नदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्मिः।

---

(ग) प्रबुद्ध इव—चैतन्यमापादित इव।

(८७) वने इति। वनेऽपि रागिणां विषयासक्तचेतसां दोषाः मोहादयः प्रभवन्ति जायन्ते। गृहेऽपि पञ्चानां चक्षुःकर्णादीनाम् इन्द्रियाणां निग्रहः संयमः त[illegible] धर्मानुष्ठानम्। यः अकुत्सिते अनिन्दनीये पुण्ये इति यावत् कर्मणि प्रवर्त्तते पु[illegible] माचरति निवृत्तरागस्य विषयासक्तिरहितस्य वीतस्पृहस्येति यावत् गृहं तपोवनं त[illegible] वनवत् धर्मानुष्ठानस्थानम्। वंशस्थविलं वृत्तम्।

(८८) दुःखित इति। यत्र कुत्र यस्मिन् कस्मिन्नपि आश्रमे रतः [illegible] दुःखितोऽपि धर्मं चरेत् अनुतिष्ठेत् सर्वेषु भूतेषु प्राणिषु समः समभावः [illegible] ज्ञानं धर्मस्य हेतुः लिङ्गं ब्रह्मचर्य्याद्याश्रमव्यञ्जकं चिह्नं न धर्मकारणमिति शेषः।

(८९) वृत्त्यर्थमिति। येषां नराणां वृत्तिः जीविका अर्थः प्रयोजनं [illegible] जीविकार्थं न तु लोभसंवरणार्थमिति भावः। भोजनम् आहारः सन्तानार्थं [illegible] अपत्यार्थं स्त्रीसम्भोगः न तु कामोपभोगाय। सत्यवचनार्थं सत्यरक्षार्थं वाक् [illegible] प्रयोगः ते दुर्गाणि अलङ्घनीयानि स्थानान्यपि तरन्ति अतिक्रामन्ति।

(९०) आत्मेति। संयमः इन्द्रियनिग्रह एव पुण्यं पवित्रं तीर्थं सोपानं यस्याः

तत्राभिषेकं कुरु पाण्डुपुत्र ! न वारिणा शुध्यति चान्तरात्मा॥९०

विशेषतश्च, जन्ममृत्युजराव्याधिवेदनाभिरभिप्लुतम्।

संसारमिदमत्यन्तमसारं त्यजतः सुखम्॥९१॥

दुःखमेवास्ति न सुखं यस्मात् तदुपलक्ष्यते।

दुःखार्त्तस्य प्रतीकारे सुखसंज्ञा विधीयते"॥९२॥

कौण्डिन्यो ब्रूते, "एवमेव। ततोऽहं तेन (घ) शोकाकुलेन ब्राह्मणेन शप्तः। "यद्द्यारभ्य मण्डूकानां वाहनं भविष्यसीति"। कपिलो ब्रूते, "सम्प्रति उपदेशासहिष्णुः(ङ)भवान्, शोकाविष्टं ते हृदयम्। तथापि कार्य्यं शृणु।

सङ्गः सर्वात्मना हेयः स चेत् त्यक्तुं न शक्यते।

स सद्भिः सह कर्त्तव्यः सतां सङ्गो हि भेषजम्॥९३॥

---

सा सत्यम् उदकं जलं यस्याः सा शीलं चरित्रं तटं यस्याः सा दया ऊर्मिः तरङ्गमाला यस्याः तथाभूता आत्मा नदी तत्र नद्यां, हे पाण्डुपुत्र! अभिषेकं कुरु वारिणा केवलेन जलेन च अन्तरात्मा चेतः न शुध्यति शुद्धिं लभते। उपजातिवृत्तम्।

(९१) जन्मेति। जन्म उत्पत्तिः मृत्युः मरणं जरा वार्द्धक्यं व्याधिः रोगः वेदना शोकः तैरभिप्लुतं सङ्कुलम् अत्यन्तम् अतिशयेन असारम् इदं संसारं त्यजतो सुखं भवतीति शेषः।

(९२) दुःखमिति। दुःखमेव अस्ति विद्यते सुखं नास्ति कुत इत्याह यस्मात् [दुः]खमेव उपलक्ष्यते अनुभूयते दुःखार्त्तस्य दुःखकातरस्य प्रतीकारे दुःखोपशमे [सु]खसंज्ञा सुख इति नाम विधीयते क्रियते।

(घ) शोकाकुलेन—शोकार्त्तेन।

(ङ) उपदेशासहिष्णुः—दुःखाभिसन्तप्तहृदयत्वात् उपदेशधारणस्य अनर्हः।

(९३) सङ्ग इति। सङ्गः आसक्तिः विषयानुरागः सर्वात्मना सर्वथा त्याज्यः [हेय]ः। स सङ्गः त्यक्तुं न शक्यते चेत् तर्हि स सङ्गः सद्भिः साधुभिः सह कर्त्तव्यः हि यतः सतां साधूनां सङ्गः भेषजं चित्तग्लानिपरिहारार्थं महौषधिः। सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवतीति भावः।

अन्यच्च, कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते।
स्वभार्य्यां प्रति कर्त्तव्यः सैव तस्य हि भेषजम्" ॥ ९४ ॥

एतच्छ्रुत्वा स कौण्डिन्यः (च) कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहणं कृतवान्। ततो ब्राह्मणशापं भोक्तुं मण्डूकान् उद्वोढुम् अत्र तिष्ठामि।" अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादस्य तत् कथितम्। ततोऽसावागत्य स मण्डूकनाथः सर्पमधिष्ठितवान्। स सर्पस्तं पृष्ठे कृत्वा (छ)चित्रपदक्रमं बभ्राम। परेद्युश्चलितुम् असमर्थं तं मण्डूकनाथोऽवदत्। "किमिति भवान् अद्य मन्दगतिः?" सर्पो ब्रूते, "देव! आहारविरहात् दुर्बलोऽस्मि।" मण्डूकनाथोऽवदत्, अस्मदाज्ञया मण्डूकान् भक्षय।" ततः "गृहीतोऽयं (ज) महाप्रसादः" इत्युक्त्वा क्रमशः स मण्डूकान् खादति। अथ निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः। अतोऽहं ब्रवीमि। स्कन्धेनापि वहेच्छत्रून् इत्यादि। देव! यातु इदानीं पुरावृत्ताख्यानकथनं सर्वथा सन्धेयोऽयं हिरण्यगर्भो राजा सन्धीयतामिति मे मतिः।" राजा उवाच, "कोऽयं भवतो (झ) विचारः? यतो जित

---

(९४) काम इति। कामः रतीच्छा सर्वात्मना सर्वथा हेयः त्याज्यः स [illegible] त्यक्तुं न शक्यते चेत् तर्हि स्वभार्य्यां धर्मपत्नीं प्रति कर्त्तव्यः सैव स्वभार्य्यैव [illegible] कामस्य सेवनम् औषधम्।

(च) कपिलोपदेशामृतप्रशान्तशोकानलः—कपिलस्य उपदेशः प्रबोधव[illegible] अमृतं तेन प्रशान्तः निर्वापितः शोकानलः शोकदहनो यस्य सः, कपिलो[illegible] लब्धसंज्ञः इत्यर्थः।

(छ) चित्रपदक्रमं—चित्रः विचित्रः पदानां क्रमो विक्षेपः पादन्यासो [illegible] तत्।

(ज) महाप्रसादः—महानुग्रहः। (झ) विचारः—नीतिः।

स्तावत् अयम् अस्माभिः। ततो यदि अस्मदाज्ञया सेवायां वसति, तदास्तां नो चेत् विगृह्यताम्।" अत्रान्तरे जम्बु-द्वीपात् आगत्य शुकेन उक्तम्, "देव! सिंहलद्वीपस्य सारसो राजा सम्प्रति जम्बुद्वीपम् आक्रम्याधितिष्ठति।" राजा तं ससम्भ्रम् आह, "किं किम्?" शुकः पूर्वोक्तं कथयति। गृध्रः स्वगतम् उवाच, साधु रे चक्रवाक! मन्त्रिन्! साधु राजा।" सकोपम् आह, "आस्तां तावदयं, तमेव गत्वा समूलमुन्मूलयामि।" दूरदर्शी विहस्याह,

"न शरन्मेघवत् कार्य्यं वृथैव घनगर्जितम्।
परस्यार्थमनर्थं वा प्रकाशयति नो महान्॥ ९५॥

अपरञ्च, एकदा न विगृह्णीयात् बहून् राजा विवादिनः।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाशितो ध्रुवम्॥ ९६॥

देव! किम् इतो विना सन्धानं गमनमस्ति? यत्र अस्माकं पश्चात् प्रकोपः कर्त्तव्यः।

अपरञ्च, योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः।
स तथा तप्यते मूढ़ो ब्राह्मणो नकुलादिव" ॥ ९७॥

---

स[illegible] ९५ ) नेति। शरन्मेघवत् शरत्कालीनमेघ इव वृथैव विफलमेव घनगर्जितं [illegible] न कार्य्यं कर्त्तव्यं, महान् जनः परस्य शत्रोः अर्थम् इष्टम् अनर्थम् [illegible] वा न प्रकाशयति न वाङ्मात्रेण प्रकटयति।

[illegible]९६ ) एकदेति। राजा एकदा युगपत् बहून् विवादिनः विरोधिनः शत्रून् [illegible]वत् न विगृह्णीयात् विरुन्ध्यात्, सदर्पः सगर्वः उरगः सर्पोऽपि बहुभिः [illegible] पीलिकादिभिः ध्रुवं निश्चितं नाशितः हतः।

[illegible]९७ ) य इति। यो जनः अर्थतत्त्वं कोपस्य प्रकृतकारणम् अविज्ञाय अज्ञात्वा क्रोधस्यैव कोपस्यैव वशम् अधीनतां गतः मूढ़ः मूर्खः नकुलात् ब्राह्मण इव तथा तप्यते अनुतापं लभते।

राजा पृच्छति, "कथमेतत् ?" दूरदर्शी कथयति, "अस्ति उज्जयिन्यां माधवो नाम ब्राह्मणः। तस्य ब्राह्मणी प्रसूता। सा बालापत्यरक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता। अथ ब्राह्मणस्य कृते राज्ञः पार्वणश्राद्धं दातुमागतो जनः। तं दृष्ट्वा ब्राह्मणः सहजदारिद्र्यात् अचिन्तयत्। "यदि सत्वरं न गच्छामि तदा अन्यः कश्चिच्छ्राद्धं ग्रहीष्यति।

उक्तञ्च, आदेयस्य प्रदेयस्य कर्त्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्। ९८॥

शिशोश्चात्र रक्षकः कोऽपि नास्ति ? तत् किं करोमि ? भवतु तावत् चिरकालपालितमम्मुं (ञ) सुतनिर्विशेषं नकुलं बालकरक्षार्थं व्यवस्थाप्य गच्छामि" तथा कृत्वा गतः। ततस्तत्र नकुलेन बालकसमीपमागच्छन् तूष्णीं कृष्णसर्पो व्यापादितः खण्डितश्च। अथ असौ नकुलो ब्राह्मणमायान्तम् अवलोक्य (ट) रक्तविलिप्तमुखपादः सत्वरम् उपगम्य ब्राह्मणस्य चरणयोर्लुलोठ। ततः असौ ब्राह्मणस्तं तथाविधं दृष्ट्वा मम पुत्रः अनेन भक्षित इति अविचार्य्य तं व्यापादितवान्। अनन्तरं यावत् उपसृत्य पश्यति ब्राह्मणस्तावद् बालकः सुस्थः स्वपिति, सर्पस्तु व्यापादितस्तिष्ठति। ततः असौ ब्राह्मणो विषादम् उपगतः। अतः अहं ब्रवीमि। योऽर्थतत्त्वम् अविज्ञाय इत्यादि।

---

(९८) आदेयस्येति। आदेयस्य आदातुं योग्यस्य अन्यकर्तृकसम्प्रदानीभूतस्य प्रदेयस्य स्वयं सम्प्रदातुं योग्यस्य कर्त्तव्यस्य अवश्यसम्पादनीयस्य च क्षिप्रं शीघ्रम् अक्रियमाणस्य असम्पद्यमानस्य सतः कालः समयः तत् रसं गृह्णाति तत्कार्य्यं विफलीकरोतीत्यर्थः।

(ञ) सुतनिर्विशेषम्—अपत्यवत् स्नेहास्पदम्।

(ट) रक्तविलिप्तमुखपादः—रक्तमिश्रितसर्वाङ्गः।

अपरञ्च, कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी भवेत्॥ ९९॥

राजाह, "मन्त्रिन्! एष ते निश्चयः।" मन्त्री ब्रूते, "एवमेव।

यतः, स्मृतिश्च परमार्थेषु वितर्को ज्ञाननिश्चयः।
दृढ़ता मन्त्रगुप्तिश्च मन्त्रिणः परमो गुणः॥ १००॥

तथाच, सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥१०१॥

तद्देव! यदि इदानीमस्मद्वचनं क्रियते तदा सन्धाय गम्यताम्। यतः,

यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने।
संख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता॥" १०२॥

राजाह, "कथमेवं सत्वरं सम्भाव्यते?" मन्त्री ब्रूते, "देव! सत्वरं भविष्यति।

यतः, मृद्घटवत् सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।

---

२( ९९ ) काम इति। कामः विषयभोगलिप्सा क्रोधः कोपः तथा लोभः धनस्पृहा हर्षः सन्तोषः मानः सम्मानं तथा मदः गर्वः एनं षड्वर्गम् उत्सृजेत् अस्मिन् त्यक्ते इति लोकः सुखी भवेत्।

स्म(१००) स्मृतिरिति। परमार्थेषु प्रशस्ततत्त्वेषु स्मृतिः अभिनिवेशः वितर्कः विवेकः ज्ञाननिश्चयः बुद्धिस्थिरता दृढ़ता अविचलितप्रतिज्ञता मन्त्रगुप्तिः रहस्यसंगोपनं मन्त्रिणः परमो गुणः प्रधानो गुणः।

तु(१०१) सहसेति। सहसा अविविच्य क्रियां न विदधीत न कुर्य्यात्, अविवेकः अविमृश्यकारित्वम् आपदां विपदां परं प्रधानं पदम्। गुणलुब्धाः गुणवत्पक्षपातिन्यः स्वयमेव विमृश्यकारिणं विवेकिनं वृणुते प्रार्थयन्ते। सुन्दरीवृत्तम्।

(१०२) यदीति। यद्यपि साध्यसाधने अभीष्टसिद्धिविषये चत्वारः उपायाः सामदानादयः निर्दिष्टाः तथापि तेषाम् उपायानां संख्यामात्रम् अधिकसंख्यादर्शनमात्रं फलं सिद्धिः कार्य्यसाधनन्तु साम्नि उपाये एव व्यवस्थिता निरूपिता।

सुजनस्तु कनकघटवद् दुर्भेद्यश्चाशु सन्धेयः ॥ १०३ ॥

अपरञ्च, अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्माऽपि नरं न रञ्जयति ॥ १०४ ॥

विशेषतश्च, असौ धर्मज्ञो राजा सर्वज्ञो मन्त्री च ज्ञातमेत-न्मया पूर्वं, मेघवर्णवचनात्, तत्कृतकार्य्यसन्दर्शनाच्च।
यतः, कर्मानुमेयाः सर्वत्र परोक्षे गुणवृत्तयः।
तस्मात् परोक्षवृत्तीनां फलैः कर्म विभावयेत् ॥" १०५ ॥

राजाह, "अलम् उत्तरोत्तरेण। यथाभिप्रेतम् अनुष्ठीयताम्" एतन्मन्त्रयित्वा गृध्रो महामन्त्री तत्र यथार्हं कर्त्तव्यमित्युक्त्वा दुर्गाभ्यन्तरं प्रचलितः। ततः प्रणिधिवकेनागत्य राज्ञो हिरण्य-गर्भस्य निवेदितम्। "देव! सन्धिं कर्त्तुं महामन्त्री गृध्रो-ऽस्मत्समीपम् आगच्छति।" राजहंसो ब्रूते, "मन्त्रिन्! पुनः (ठ) अभिसन्धिना केनचिदत्रागन्तव्यम्।" सर्वज्ञो विहस्याह, "देव! न शङ्कास्पदमेतत्। यो महाशयोऽसौ दूरदर्शी।

---

(१०३) मृदिति। दुर्जनः दुराचारः मृद्घटवत् मृण्मयकुम्भ इव सुखेन अ-यासेन भेद्यः पराजेयः दुः कष्टसाध्यं सन्धानं सन्धिर्येन स तथोक्तः दुःस-न्धेयश्च भवति। सुजनः सत्प्रकृतिलोकस्तु कनकघटवत् सुवर्णमयकलस इव दुर्भेद्यः शीघ्रं सन्धेयश्च भवति।

(१०४) अज्ञ इति। अज्ञोऽविद्वान् मूर्खं इति यावत् सुखं य-था आराध्यः प्रसादयितव्यः विशेषज्ञः विवेकधीसम्पन्नश्च सुखतरम् अधिकं तथा आराध्यते सेव्यते। ज्ञानलवदुर्विदग्धं किञ्चित् ज्ञानगर्वितं पण्डित-सगर्वं नरं ब्रह्मापि न रञ्जयति न सन्तोषयति। आर्य्याजातिः।

(१०५) कर्मेति। सर्वत्र सर्वस्मिन् देशे परोक्षे अप्रत्यक्षे गुणवृ-त्तयः गुण-शालिनः आत्मगुणमप्रख्यापयन्तः कर्मणा अनुमेयाः फलैः ज्ञातव्याः परोक्षवृत्तीनां गूढ़ाकारेङ्गितानां नृपादीनां कर्मफलैः तत्तत्कार्यानुयायि-विभावयेत् निश्चिनुयात्।

(ठ) अभिसन्धिना—व्याजेन।

अथवा (ङ) स्थितिरियं मन्दमतीनां कदाचित् शङ्कैव न क्रियते । कदाचित् सर्वशङ्का । तथा हि,

सरसि बहुशस्ताराच्छाये क्षणात् परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशासु विचक्षणः ।
न दशति पुनस्ताराशङ्की दिवाऽपि सितोत्पलं
कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ १०६ ॥
दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि ननु फुत्कृतं भुङ्क्ते ॥ १०७ ॥

तद्देव ! यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सुसज्जीक्रियताम् ।" तथानुष्ठिते सति स गृध्रो मन्त्री दुर्गद्वाराच्चक्रवाकेण सत्कृत्यानीय राजदर्शनं कारितो दत्तासने च उपवेशितः । चक्रवाक उवाच, "मन्त्रिन् ! (ढ) युष्मदायत्तं सर्वं स्वेच्छयोपभुज्यतामिदं राज्यम् ।" राजहंसो ब्रूते, "एवमेव ।" दूरदर्शी ब्रूते, "एवमेवैतत्, किन्तु इदानीं (ण) बहुप्रपञ्चनं प्राङ्‌ (?) योजनम् । यतः,

---

सन्धिः वि (ङ) स्थितिः—नियमः ।

(हारसन्धिः) सरसीति । कुमुदविटपम् अन्विष्यतीति कुमुदविटपान्वेषी कुमुद-(११५)र्थसुयतः विचक्षणः सुचतुरः हंसः निशासु रात्रिषु बहुशः अनेकशः सन्ध्याने (?) छाये नक्षत्रप्रतिबिम्बे क्षणात् परिवञ्चितः प्रतारितः सन्, नक्षत्रप्रतिबिम्बे भ्रमापूर्वं (?) वञ्चितः सन् दिवापि दिवसेऽपि ताराशङ्की नक्षत्रभ्रान्त्या पुनः सितोत्पलं (११६) दशति न गृह्णाति । कुहकेन छलेन चकितः विभ्रान्तचित्तः लोकः तुल्ये कृतेऽपि अपायम् अनिष्टम् अपेक्षते मन्यते आशङ्कते इति यावत् ।

(श्लो १०७) दुर्जनेति । दुर्जनेन वञ्चकेन दूषितं कलुषितं मनश्चित्तं यस्य तस्य एतरितस्येत्यर्थः सुजनेषु साधुषु अपि विश्वासः नास्ति न विद्यते । अत्र दृष्टान्त-... ननु निश्चितं पायसेन दग्धः पायसदग्धः बालः दध्यपि फुत्कृतं फुत्कृत्वा भुङ्क्ते खादति उष्णभ्रान्त्येति भावः ।

(ढ) युष्मदायत्तं—युष्मदधीनम् । (ण) बहुप्रपञ्चनं—बहुवाग्विस्तारः ।

लुब्धमर्थेन गृह्णीयात् स्तब्धमञ्जलिकर्मणा।
मूर्खं छन्दानुवृत्तेन याथातथ्येन पण्डितम्॥ १०८॥

अन्यच्च, सद्भावेन हरेन्मित्रं सम्भ्रमेण तु बान्धवान्।
स्त्रीभृत्यान् दानमानैश्च दाक्षिण्येनेतरं जनम्॥ १०९॥

तत् इदानीं सन्धाय गम्यताम् महाप्रतापश्चित्रवर्णो राजा।" चक्रवाको ब्रूते, "यथा सन्धानं कार्य्यं तदप्युच्यताम्।" राजहंसो ब्रूते, "(त) कतिप्रकाराः सन्धीनां सम्भवन्ति?" गृध्रो वदति, "कथयामि, श्रूयताम्।

बलीयसाभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः।
आपन्नः सन्धिमन्विच्छेत् कुर्वाणः कालयापनम्॥ ११०॥

कपाल उपहारश्च सन्तानः सङ्गतस्तथा।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः॥ १११॥

अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः।
परिक्रयस्तथोच्छिन्नस्तथा च परभूषणः॥ ११२॥

---

(१०८) लुब्धमिति। लुब्धं लोभपरवशं जनम् अर्थेन धनेन गृह्णीयात्, स्तब्धं गर्वितं जनम् अञ्जलिकर्मणा विनयेन, मूर्खं छन्दानुवृत्तेन अभिप्रेतका[illegible] पण्डितं याथातथ्येन यथार्थज्ञापनेन।

(१०९) सद्भावेनेति। सद्भावेन प्रणयेन मित्रं बन्धुं हरेत् वशीकु[illegible] सम्भाषणेन बान्धवान् आत्मीयान् ज्ञातिप्रभृतीन्, स्त्रीभृत्यान् भार्य्यांनु[illegible] मानैः अर्थदानेन आदरेण च, दाक्षिण्येन आनुकूल्येन इतरम् उदासी[illegible]

(त) कतिप्रकाराः—कतिविधाः।

(११०) बलीयसेति। बलीयसा प्रबलेन शत्रुणा अभियुक्तस्तु [illegible] नास्ति अन्या सन्धिव्यतिरिक्ता प्रतिक्रिया प्रतिविधानं यस्य स तथाभूतः [illegible] तथा विपन्नः विपदि पतितः कालयापनं समयातिपातं कुर्वाणः विदधानः [illegible] अन्विच्छेत् प्रार्थयेत।

(१११।११२।११३) कपाल इति। सन्धिप्रकारमाह कपालः उपहारः सन्तानः सङ्गतः तथा उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः अदृष्टनरः आदिष्टः आत्मादिष्टः

स्कन्धोपनेयः सन्धिश्च षोड़शैते प्रकीर्त्तिताः।
इति षोड़शकं प्राहुः सन्धिं सन्धिविचक्षणाः॥ ११३॥
कपालसन्धिर्विज्ञेयः केवलं समसंज्ञितः।
सम्प्रदानाद्भवति य उपहारः स उच्यते॥ ११४॥
सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः।
सद्भिस्तु सङ्गतः सन्धिर्मैत्रीपूर्वं उदाहृतः॥ ११५॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनः।
सम्पत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते॥ ११६॥
सङ्गतः सन्धिरेवायं प्रकृष्टत्वात् सुवर्णवत्।
तथान्यैः सन्धिकुशलैः काञ्चनः स उदाहृतः॥ ११७॥
द्रव्यात्मकार्य्यसिद्धिं तु समुद्दिश्य क्रियेत यः।

---

[?]पग्रहः परिक्रयः तथा उच्छिन्नः तथा परभूषणः स्कन्धोपनेयः एते षोड़श सन्धयः प्रकीर्त्तिताः कथिताः। सन्धिविचक्षणा इति पूर्वोक्तरूपं षोडशकं षोड़शविधं सन्धिं प्राहुः कथयन्ति।

(११४) कपालेति। केवलं समसंज्ञितः समनाम्ना प्रसिद्धः सन्धिः कपालसन्धिः विज्ञेयः वेदितव्यः। सम्प्रदानात् अर्थप्रदानात् यः भवति स उपहारः उपहारसन्धिः उच्यते कीर्त्यते।

(११५) सन्तानेति। दारिकादानपूर्वकः कन्यादानारम्भकः कन्याप्रदानेन [?] सम्बन्धः सन्तानसन्धिः विज्ञेयः ज्ञातव्यः। सद्भिः सज्जनैः मैत्रीपूर्वः [?]पूर्वकः सन्धिः सङ्गतसन्धिः उदाहृतः कथितः।

(११६। ११७) यावदिति। यावदायुःप्रमाणः यावज्जीवनस्थायी समानं [?] सर्व्वेऽपि [?] अर्थस प्रयोजनं यस्मिन् स समधनसम्पन्नः सम्पत्तौ सम्पत्काले विपत्तौ [?]काले वा कारणैः कैश्चिदपि हेतुभिः यः न भिद्यते भेदमाप्नोति। अयम् [?] एव सङ्गतः सन्धिः प्रकृष्टत्वात् सर्वोत्कृष्टत्वात् सुवर्णवत् सुवर्णतुल्यः सुवर्णवत् नश्यते न च भिद्यते इति भावः। स सन्धिः अन्यैः अपरैः सन्धिकुशलैः काञ्चनः काञ्चननाम्ना उदाहृतः कथितः।

(११८) द्रव्येति। यः सन्धिः द्रव्यं सम्पत् आत्मा देहः कार्य्यं कर्त्तव्यं कर्म

स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ११८ ॥
मयास्योपकृतं पूर्वं ममाप्येष करिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥ ११९ ॥
उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयं चापि प्रतीकारो रामसुग्रीवयोरिव ॥ १२० ॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति ।
सुसंहितप्रमाणस्तु स च संयोग उच्यते ॥ १२१ ॥
आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति ।
यस्मिन् पणस्तु क्रियते सः सन्धिः पुरुषान्तरः ॥ १२२ ॥
त्वयैकेन मदीयोऽर्थः सम्प्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्य्यात् सोऽदृष्टपुरुषः स्मृतः ॥ १२३ ॥

---

एतेषां सिद्धिं सम्पादनं समुद्दिश्य अभिप्रेत्य क्रियेत साध्येत उपन्यासकुशलैः स उपन्याससन्धिः उदाहृतः कीर्त्तितः ।

( ११९ ) मयेति । पूर्वं प्राक् मया अस्य जनस्य उपकृतम् उपकारः कृतः एषः पूर्वोपकृतः जनः ममापि करिष्यति उपकारमिति शेषः इति बुद्ध्या यः सन्धिः क्रियते स्थाप्यते स प्रतीकारः उच्यते ।

( १२० ) उपकारमिति । अस्य उपकारं करोमि एष ममापि करिष्यति उपकारमिति शेषः । अयञ्चापि अपरविधः रामसुग्रीवयोरिव प्रतीकारसन्धिः ।

( १२१ ) एकार्थामिति । यत्र सन्धौ एकः अद्वितीयः अर्थः प्रयोजनं [illegible] सा तां क्रियाम् उद्दिश्य गच्छति सन्धिं बध्नाति सुसंहितम् अन्योन्यसंश्लिष्टं प्र[illegible] हेतुः यस्य दृढबद्धः स च सन्धिः संयोगः संयोगसन्धिः उच्यते कथ्यते ।

( १२२ ) आवयोरिति । आवयोर्द्वयोः योधमुख्यैः सेनापतिप्रधानैः [illegible] मत्कार्य्यं साध्यतां सम्पाद्यताम् एतैरेव कार्य्यं सम्पन्नं भवतु वयन्तु उदासीनास्ति[illegible] इति एवं यस्मिन् सन्धौ पणः प्रतिज्ञा क्रियते स सन्धिः पुरुषान्तरः उच्यते [illegible]

( १२३ ) त्वयेति । यत्र सन्धौ त्वया एकेन असौ मदीयः अर्थः प्रयोजनं सम्प्रसाध्यः सम्पादनीयः इति पणम् अङ्गीकारं कुर्य्यात् स अदृष्टपुरुषः तन्नामा सन्धिः स्मृतः कथितः ।

यत्र भूम्येकदेशेन पणेन रिपुवर्जितः ।
सन्धीयते सन्धिविद्भिः आदिष्टः स उदाहृतः ॥ १२४ ॥
स्वसैन्येन तु सन्धानमात्मादिष्ट उदाहृतः ।
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥ १२५ ॥
कोषांशेनार्द्धकोषेण सर्वकोषेण वा पुनः ।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥ १२६ ॥
भुवां सारवतीनां तु दानादुच्छिन्न उच्यते ।
भूम्युत्थफलदानेन सर्वेण परभूषणः ॥ १२७ ॥
परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।
स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविचक्षणाः ॥ १२८ ॥
परस्परोपकारस्तु मैत्री सम्बन्धकस्तथा ।

---

(१२४) यत्रेति । यत्र सन्धौ भूम्येकदेशेन राज्यैकदेशदानेन पणेन राज्यांशदानाङ्गीकारेण रिपुवर्जितः शत्रुविरहितः सन् सन्धीयते सन्धेयो भवति स सन्धिविद्भिः सन्धिकुशलैः आदिष्टः उदाहृतः कथितः ।

(१२५) स्वेति । स्वसैन्येन स्वकीयसेनया सह सन्धानम् आत्मादिष्टः तन्नामा सन्धिः उदाहृतः । प्राणरक्षार्थं जीवितरक्षार्थं सर्वदानात् सर्वस्व प्रदानात् यः [illegible]यते स उपग्रहः उपग्रहनामा सन्धिः ।

(१२६) कोषेति । यत्र कोषांशेन कियद्धनेन अर्द्धकोषेण कोषस्यार्द्धसंख्यक[illegible]दानेन सर्वकोषेण वा यः सन्धिः शिष्टस्य सभ्यस्य अमात्यस्य रक्षार्थं परित्राणाय [illegible]यते स परिक्रयः उदाहृतः कथितः ।

(१२७) भुवामिति । सारवतीनाम् उर्वरत्वादिगुणयुक्तानां भुवां भूमीनां [illegible]नात् उच्छिन्नः उच्छिन्ननामा सन्धिः उच्यते । सर्वेण सकलेन भूम्युत्थफलदानेन [illegible]जातशस्यादीनाम् अर्पणेन यः सन्धिः स परभूषणः उच्यते इति शेषः ।

(१२८) परिच्छिन्नमिति । यत्र सन्धौ परिच्छिन्नं चेयादानीय कृतपरिपाटीकं फलं शस्यं प्रतिस्कन्धेन स्कन्धे वाहयित्वा दीयते अर्प्यते तं सन्धिं सन्धिविचक्षणाः स्कन्धोपनेयं प्राहुः कथयन्ति ।

उपहारश्च विज्ञेयाश्चत्वारश्चैव सन्धयः ॥ १२९ ॥
एक एवोपहारस्तु सन्धिरेव मतो मम ।
उपहारविभिन्नास्तु सर्वे मैत्रविवर्जिताः ॥ १३० ॥
अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते ।
उपहाराहते तस्मात् सन्धिरन्यो न विद्यते" ॥ १३१ ॥

राजाह, "भवन्तो महापण्डिताः तदत्रास्माकं यथाकार्य्यम् उपदिश्यताम् ।" दूरदर्शी ब्रूते, "आः ! किमुच्यते ?

आधिव्याधिपरीतापैरद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्म्मापेतं समाचरेत् ॥ १३२ ॥
जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् ।
तथाविधमिति ज्ञात्वा शश्वत् कल्याणमाचरेत् ॥ १३३ ॥

---

(१२९) परस्परेति। परस्परोपकारः मैत्री सम्बन्धकः तथा उपहारः इति चत्वारः सन्धयः सन्धिभेदाः विज्ञेयाः विदितव्याः ।

(१३०) एक इति। एकः उपहार एव तन्नामैव सन्धिः मम मतः अभिप्रेतः उपहारविभिन्नः उपहारादन्ये सर्वे सर्वप्रकाराः सन्धयः मैत्रविवर्जिताः मैत्रीभावशून्याः ।

(१३१) अभियोक्तेति। बलीयस्त्वात् बलवत्तरत्वात् अभियोक्ता आक्रमणकारी शत्रुः अलब्ध्वा किञ्चिदपि धनादिकम् अप्राप्य न निवर्त्तते न प्रतिगच्छति तस्मात् कारणात् उपहारात् ऋते उपहारं विना अन्योऽन्यविधः सन्धिः न विद्यते नास्ति ।

(१३२) आधीति। आधिः मनस्तापः व्याधिः रोगः परीतापः पुत्रादिप्रियवियोगजनितः क्लेशः तैः उपलक्षिताय अद्य अस्मिन् अहनि श्वः वा आगामिदिने वा विनाशिने अवश्यं क्षयशीलाय नश्वरायेत्यर्थः शरीराय देहाय शरीरार्थं हि नाम जनः धर्म्मापेतं धर्मविगर्हितं पापमिति यावत् समाचरेत् अनुतिष्ठेत् न कोऽपीत्यर्थः ।

(१३३) जलेति। खलु यतः देहिनां शरीरिणां जीवितं जीवनं जलान्तश्चन्द्रचपलं जलमध्ये प्रतिविम्बितचन्द्रविम्बवत् चञ्चलं क्षणविध्वंसीति यावत् तथाविधं